समंख्याः प्रतृप्यताऽनेन सुधारसेन ॥ ॐ ह्रीं भुः षष्टिसहस्रसंख्येभ्यो नागेभ्योऽमृतांजलिं प्रसिंचामि स्वाहा । ईशान्यां दिशि नागसंतर्पणं ॥ ॐ ह्रीं हे नागकुमारा अत्र आगच्छत २ संवौषट् स्वाहा । ॐ० अत्र तिष्ठत २ ठठ स्वाहा । ॐ० अत्र मम सन्निहिता भवत २ वषट् स्वाहा ॥ आह्वानस्थापनसन्निधीकरणं ॥ हे नागकुमारा इदमर्घ्यमित्यादि ॥ इति पंचकुमारपूजा ॥

## ॥ अथ क्षेत्रपालपूजा ॥

क्षेत्रपालाय यज्ञेऽस्मिन्नेनत्क्षेत्राधिरक्षणे । बलिं दास्यामि दिश्यस्मैर्वैद्यां विघ्नविघातिने ॥ ॐ आँ क्रौं ह्रीं हे क्षेत्रपाल अत्रावतरावतर संवौषट् स्वाहा । ॐ० अत्र तिष्ठ २ ठठ स्वाहा । ॐ० अत्र मम सन्निहितो भव २ वषट् स्वाहा ॥ आह्वानस्थापनसन्निधीकरणं ॥ श्रीजैनबिंबांकितरत्नमौलिं माणिक्यचूडामणिभासिचूडं । श्रीखंडसंमिश्रितवारिणाऽहं श्रीब्रह्मदेवं वरमर्चयामि ॥ ॐ ह्रीं ब्रह्मदेवाय जलं समर्पयामि ॥ १ ॥ सिंदूररत्नोऽ्पिदग्रभागं सपाटिरत्नत्रयभासिबालं । काश्मीरचंद्रार्चितचंदनेन श्रीब्र० ॥ ॐ ह्रीं ब्र० ॥ गंधं ॥ २ ॥ जिनेशपादार्चितकल्पवल्लीप्रसूनगुच्छामलकर्णपूरं । शाल्यक्षतैः शुभ्रतरैरखंडैः श्रीब्र० ॥ ॐ ह्रीं ब्र० ॥ अक्षतं ॥ ३ ॥ रत्नोज्वलत्कुंडलकांतवर्णं सद्रत्नकंठाभरणाभिरामं । मंदारजातिबकुलप्रसूनैः श्रीब्र० ॥ ॐ ह्रीं ब्र० ॥ पुष्पं ॥ ४ ॥ चतर्भुजं दक्षिणपाणिपद्मं लीलारविंदं दुरघोरभंगं । क्षीरान्नशाल्यन्नघृतान्नभक्ष्यैः

श्रीव्र० ॥ ॐ ह्रीं व्र० ॥ चरुं ॥ ५ ॥ आमोदहस्तं धृतबीजपूरं खड्गैकहस्तं भयदानहस्तं । दीपैरधूमैरभिरत्नदीपैः श्रीव्र० ॥ ॐ ह्रीं व्र० ॥ दीपं ॥ ६ ॥ विशालवक्षास्पदगौरहारमलंकृतं श्यामलबाहुयुग्मं । दशांगकालागुरुधूपधूमैः श्रीव्र० ॥ ॐ ह्रीं व्र० ॥ धूपं ॥ ७ ॥ सुदिव्य-वस्त्रं कटिसूत्ररम्यं कलद्वयं नूपुरचारुपादं । नारंगपूगाम्रफलैः सिताद्यैः श्रीव्र० ॥ ॐ ह्रीं व्र० ॥ फलं ॥ ८ ॥ केयूरहारांगदवर्णपूर्णं जीर्णमुद्राम्यदगौरुपट्टैः दुकूलनेत्रादिविचित्रवस्त्रैः श्रीव्र० ॥ ॐ ह्रीं व्र० ॥ वस्त्राभरणं ॥ ९ ॥ श्रीखंडैर्नवपर्णैर्बहलपरिमलैस्तंदुलैर्हारिपुष्पै । नैवेद्यैर्दिव्यमाधुर्यैः रमल-फलशतैः स्निग्धगंभीरधूपैः ॥ दिव्यैर्दीपैश्च नानामलमणिरचितैः कुंडलैश्चारुहारै । रम्यैर्देवांगवस्त्रै निधिविशदविधुं ब्रह्मदेवं यजामि ॥ अर्घ्य ॥ इत्यर्चयित्वा जिनपादभक्तं । भक्तानुरक्तं वरदा-नदक्षं ॥ यक्षेश्वमनल्पदविघ्नकानां शांतिं प्रकुर्वे वरशांतिधारा ॥ शांतिधारां ॥

## ॥ अथ पुण्याहवाचनं ॥

श्रीनिजेरशाधिपचक्रपूर्वमित्यादिपठेत ॥

## ॥ अथ दर्भस्थापना ॥

पवित्रभूमिं परितो दिशासु पूर्वादिकासु प्रथितान प्रशस्तान । अशेषविघ्नोपशमाय दर्भान् संस्था-पयामो हरितान क्रमेण ॥ १ ॥ ॐ ह्रीं दर्पमथनाय नमः स्वाहा । ब्रह्मादिदशदिक्षु दर्भाः ॥

---

१ पृष्ठ ६० पर.

## ॥ अथ भूम्यर्चनम ॥

गंधछटाभिः परित प्रगित्या कारमग्निमार्गेण कृतार्चेना । सुगंधिपुष्पप्रकरां धरित्रीं यज्ञोचितां सांप्रतमर्चयामि ॥ २ ॥ ॐ ऱ्हीं भूः स्वाहा । भूमिदेवते इदं जलादिकमर्चनं गृण्ह २ । जलैर्गंधादिभिश्च भूम्यर्चनं ॥

## ॥ अथ दर्भासनं ॥

दर्भे प्रस्तीर्य वस्त्रं वा वेत्रासनमथोऽपि वा । अत्रोपवेशनं कुर्वे वामे पल्यंकयोगतः ॥ ३ ॥ ॐ ऱ्हीं अर्हं क्ष्मं ठठ मम दर्भासनं करोमि स्वाहा ॥

## ॥ अथ पीठस्थापनं ॥

श्रीमद्देवनिकायकिन्नरमहाविद्याधरैः सेवितं । रत्नस्वर्णमयं जिनेंद्रभवने गराज्यमानं सदा ॥ तीर्थाधीश्वरजन्ममज्जनजलैः पूतं महामदरं । नत्वा पीठमिदं निवेश्य च यजे संस्थापनार्थं विभोः ॥ ४ ॥ ॐ ऱ्हीं अर्हं क्ष्मं ठठ श्रीपीठस्थापनं करोमि स्वाहा ॥ ॐ ऱ्हीं सम्यग्दर्शनाय नमः स्वाहा । होममंडपप्रत्यग्विहितपीठस्थापनार्चनं ॥ ( येथें होमकुंडाच्या पश्चिमेस पीठ ठेवून त्यास अर्घ्य देणें. )

## ॥ अथ प्रतिमास्थापनम् ॥

श्रीहोममंडपपुरोदिशि भासमाने तन्मंडपे विहितमंजुलमंदराग्रे ॥ संस्थापिते जिनपतेः प्रतिबिंबमे- तदानीय होमविधये निदधामि पीठे ॥ ५ ॥ ॐ ह्रीं श्रीं क्लीं ऐं अर्हं जगतां सर्वशांतिं कुर्वन्तु श्रीपीठे प्रतिमास्थापनं करोमि स्वाहा । श्रीपीठे प्रतिमास्थापनं ॥ ( येथें त्या पीठावर श्रीजिन- प्रतिमा ठेवणें व त्या प्रतिमेवर पुष्पाक्षता टाकणें. )

## ॥ अथ श्रीजिनार्चनं ॥

देवो दैत्यः किन्नरः खेचरेंद्रो यक्षो रक्षश्चेंद्रमर्त्यादयश्च । नामं नामं यं समराधयंति ध्येयं ध्येयं तं जिनं पूजयामि ॥ ६ ॥ ॐ ह्रीं अर्हं नमः परमेष्ठिने जलं निर्वपामि स्वाहा । एवं गंधाद्यष्ट- विधार्चनं कुर्यात ॥

## ॥ अथ चक्रत्रयार्चनं ॥

तीर्थेशश्रीविहारे समवसृतिपुरोदेशविभ्राजमानं । श्रीमद्यक्षेन्द्रमूर्ध्नि स्फुरदुरुकिरणैःशोभितंधर्मचक्रं ॥ यद्वाभास्त्यग्र पूर्वं सुरनरखचरैर्गतिविस्मापकानि । नत्वा चक्रत्रयं श्रीजिनपतिविलसद्यज्ञभूमौ यजामि ॥ ७ ॥ ॐ ह्रीं धर्मचक्राय अप्रतिहताय नमः स्वाहा । चक्रत्रयार्चनम ॥

## ॥ अथ छत्रत्रयार्चनम् ॥

ऊर्ध्वाऽधोमध्यभेदात् त्रिभुवनमहितं लांछनं श्रीजिनेशो । मुक्तालंभूषणैकं मणिकनककनत्तुंगबिं-बाभिरामं ॥ शुंभद्वैडूर्यदंडं स्वकचकितशरच्चंद्रबिंबत्रयाभं । यज्ञेऽस्मिन्नेतदासेचनकमथ यजाम्यात-पत्रत्रयं च ॥ ८ ॥ ॐ ह्रीं श्वेतछत्रत्रयश्रियै स्वाहा । छत्रत्रयार्चनम् ॥

## ॥ अथ श्रुतपूजा ॥

जाता सर्वज्ञवक्त्राद् गणधरनिकरैर्विस्तृता वर्धिबोधे । रंगोपांगादिभेदैस्तदनु मुनिजनैश्चापि दृग्भा-विशेषात् ॥ श्रेयोमार्गप्रकाशे स्फुटरुचिविलसद्दीपिका सर्वलोक—व्यापारस्य प्रमाता त्रिभुवनम-हिता शारदा पूज्यतेऽत्र ॥ ९ ॥ ॐ ह्रीं सरस्वत्यै नमः जलं ॥ प्रतिमादक्षिणभागे वाग्दे-वतार्चनम् ॥

## ॥ अथ गणधरपूजा ॥

सिद्धांतसूक्तिसंकीर्णे श्रुतस्कंधवने घने । श्रुतकेवलिनः पादौ पूजयामि महामुनेः ॥ १० ॥ ॐ ह्रीं गणधरपरमेष्ठिने जलं ॥ प्रतिमावामभगे गणधरार्चनं ॥

## ॥ अथ यक्षार्चनम् ॥

श्रीमज्जैनेंद्रमार्गे प्रमुदितहृदयः साधुलोकोपकारी । मिथ्यादृष्टिप्रयोगप्रकटितनिखिलोन्मार्गविध्वं-सनोत्कः ॥ नानापुण्यप्रदेशप्रविहरणपटुर्विक्रियाशक्तियुक्तः । श्रीमान् यक्षाधिराजः प्रचुरतरमहः

पूज्यते पुण्ययज्ञे ॥ ११ ॥ ॐ ऱ्हीं कलियुगप्रबंधदुर्मार्गविनाशनपर सन्मार्गप्रतिपालिन् भगवन् यक्षेश्वर जलादिकमर्चनं गृहाण २ इत्यादियक्षार्चनं दक्षिणे ॥

## ॥ अथ शासनदेवतार्चनम् ॥

लोके सत्वानुकंपां परपरमजिनेंद्रोक्तसद्धर्मसेवां । दक्षां न्यक्षां मुमुक्षुव्रजमपि परमादादरादानमंतीं ॥ स्याद्वादन्यायखड्गक्षपितकलियुगानेकदुर्मार्गकक्षां । यक्षीं यक्ष्यामि यज्ञे त्रिजगदधिपतेः सर्वविघ्नो-पशांत्यै ॥ १२ ॥ ॐ ऱ्हीं कलियुगप्रबंधदुर्मार्गविनाशनपरे सन्मार्गप्रतिपालिनि भगवति यक्षिदेवि जलादिकमर्चनं गृहाण २ इत्यादिशासनदेवतार्चनं वामे ॥ ॐ ऱ्हीं उपवेशन भूः शुध्यतु स्वाहा । होमकुंडपूर्वभागे दर्भपूलेन उपवेशनभूमिशोधनं ॥ ॐ ऱ्हीं परमब्रह्मणे नमोनमः । ब्रह्मासनेऽहं उपविशामि स्वाहा । होमकुंडाग्रे होतुरुपवेशनं ॥ ततः । ( येथे होम करणाऱ्यानें होमकुंडापुढें मांडलेल्या पाटावर बसणें व त्यानंतर ) ॐ ऱ्हीं स्वस्तये कलशमुद्धारयामि स्वाहा । पुण्याहक-लशमुद्धृत्य होमकुंडदक्षिणभागे स्थापनं ॥ ( होमकुंडाच्या उजव्या बाजूस पुण्याह कलश उचलून ठेवणें. ) ॐ ऱ्हीं स्वस्तये मंगलकुंभंस्थापयामि स्वाहा । वामे मंगलकुंभस्थापनं ॥ ( डाव्या बाजूस मंगलकुंभ ठेवणें. )

## ॥ अथ होमकुंडार्चनं ॥

त्रिकोणमुज्वलज्वालं रक्तस्वस्तिकलांछनं । ब्रह्मरेफाक्षरोपेतं द्विकोणं शिखिमंडलं ॥ १३ ॥ रक्तचूर्णेन कुंडेऽस्मिन्नग्निमंडलल्लेखनम ॥ (येथें अग्निकुंडांत तांबड्या रंगानें त्रिकोण अग्निमंडल काढणें.) तिथिदेवैर्ग्रहैर्भावनादिदेवैर्दिगीश्वरैः । परिष्कृतमिदं शांत्यै होमकुंडं यजामहे ॥ १४ ॥ ॐ ऱ्हीं निरंजसे नमः इत्यादिजलैर्दर्भैर्गंधादिभिश्च कुंडार्चनं ॥

## ॥ अथ अग्निसंधुक्षणं ॥

संशुष्कदर्भाग्रविलग्नवन्हिज्वालकलापैरिव मेघनौघैः । त्रैलोक्यशांतिप्रदहोमकुंडे दर्भाग्निसंधुक्षणमातनोमि ॥ १५ ॥ ॐ ४ रं ४ अग्निं स्थापयामि स्वाहा । अग्निमंडले पवित्राग्निस्थापनं । अग्निसंधुक्षणं करोमि स्वाहा । अग्निसंधुक्षणम ॥ ( या मंत्रानें अग्निमंडलांत विस्तव ठेवून पेटविणें. )

## ॥ अथ अग्निकुमारपूजा ॥

श्रीमच्छलाकापुरुषप्रतीतगर्भान्वयाद्यास्वपि सत्क्रियासु । संसिद्धये यः पुरुषैः प्रणीतो वन्हिं तमाहूय समर्चयेऽत्र ॥ ॐ आँ क्रों ऱ्हीं स्वानर्ण सर्वलक्षणसंपूर्ण स्वायुधवाहनयुवतिजनसहित हे अग्निकुमारदेव अत्र आगच्छ २ संवौषट् स्वाहा । ॐ० अत्र तिष्ठ २ ठठ स्वाहा । ॐ० अत्र मम सन्निहितो भव २ वषट् स्वाहा ॥ आव्हाननस्थापनसन्निधीकरणं ॥

## ॥ अष्टकम् ॥

अंबरसिंधुसमुद्भृतनीरैश्चंदनचंद्रयुतैर्गतिशीतैः । विघ्नसमूहविनाशनदक्षं वन्हिकुमारमहं परिचाये ॥ ॐ ह्रीं वन्हिकुमाराय जलं ॥ १ ॥ कुंकुमचंद्रसमन्वितगंधैर्गंधविलोभमुदन्मदभृंगैः । विघ्न० ॥ ॐ ह्रीं व० गंधं ॥ २ ॥ शालिमनोहरतंदुलपुंजैश्चंद्रकलापकगैरिव गौरैः । विघ्न० ॥ ॐ ह्रीं व० ॥ अक्षतं ॥ ३ ॥ कुंदमुकैरवचंपकनीपाशोकसरोजमुखैर्वरपुष्पैः । विघ्न० ॥ ॐ ह्रीं व० ॥ पुष्पं ॥ ४ ॥ भक्ष्यविशेषसमंचितहव्यैः सर्वहृषीकसुखामृतसारैः । विघ्न० ॥ ॐ ह्रीं व० ॥ चरुं ॥ ५ ॥ दुरितभूरितमोनिकुरंबैर्भूरिरत्नसन्मणिदीपकदंबैः । विघ्न० ॥ ॐ ह्रीं व० ॥ दीपं ॥ ६ ॥ चंद्रपटीरसकुंकुमजातैर्धूपितदिग्विवरैर्वरधूपैः । विघ्न० ॥ ॐ ह्रीं व० ॥ धूपं ॥ ७ ॥ पूगकपित्थमनोहरजंबूचाम्रनगामलकादिफलौघैः । विघ्न० ॥ ॐ ह्रीं व० ॥ फलं ॥ ८ ॥ जलमलयजहृद्यामोदशाल्यक्षताद्यैर्विरचितमह मुख्यैर्जैनपादाब्जभक्त्या ॥ इह सकलजनानां पापतापोपशांत्यै वरमनलकुमारस्यास्यऽग्रतः संदधेऽर्घ्यं ॥ अर्घ्यं ॥ शांतिधारां ॥

## ॥ अथ तिथिदेवतार्चनम् ॥

यक्षादिदेवाः प्रथिताः पुरोगास्तिथिप्रभावस्य विधौ धुरीणाः । जिनाधिराजस्य पवित्रयज्ञे सुखप्रदाः पंचदशापि संतु ॥ ॐ ह्रीं क्रों प्रशस्तवर्ण सर्वलक्षणसंपूर्णस्वायुधवाहनवधूचिन्हसपरिवारा हे पंचदशतिथिदेवता अत्र आगच्छ २ संवौषट् स्वाहा । ॐ अत्र तिष्ठत २ ठठ स्वाहा । ॐ० अत्र

मम सन्निहिता भवत २ वषट् स्वाहा ॥ आह्वानस्थापनसन्निधीकरणं ॥ हे पंचदश तिथिदेवता इदमर्घ्यमित्यादि ॥ प्रथममेखलायां तिथिदेवतार्चनम ॥

## ॥ अथ नवग्रहार्चनम् ॥

आदित्यादिमहाग्रहा निजनिजस्फर्जद्विमानाश्रिताः । सौम्याऽसौम्यदशाः शुभाऽशुभलसत्कार्यप्रदानक्षमाः ॥ नित्यं मेरुपरीतयः स्थिरतरा वह्न्यादिभिश्चान्विता । आगच्छंतु जिनोत्सवं विदधतः प्रीणंतु ते धार्मिकान् ॥ ॐ ह्रीं आं क्रों प्रश० हे नवग्रहदेवा अत्र आगच्छत २ संवौषट् स्वाहा । ॐ० अत्र तिष्ठत २ ठठ स्वाहा । ॐ० अत्र मम सन्निहिता भवत वषट् स्वाहा ॥ आह्वानस्थापनसन्निधीकरणं ॥ हे नवग्रदेवा इदमर्घ्यमित्यादि ॥ द्वितीयमेखलायां नवग्रहार्चनम ॥

## ॥ अथ चतुर्णिकायामरेंद्रार्चनं ॥

भास्वंतो भवनामरा वनसुरा ज्योतिष्कदेवा स्तथा । कल्पोत्थाद्विभवान्विता इति चतुर्भेदाः सुराधीश्वराः ॥ नानाशक्तियुताः पुराजितमहापुण्योदयप्राग्भवाः । पूज्यंते जिनराजयज्ञसमये सत्कार्यसंसिद्धये ॥ ॐ ह्रीं क्रों ह्रीं प्रश० हे चतुर्णिकायामरदेवा अत्र आगच्छत २ संवौषट् स्वाहा । ॐ० अत्र तिष्ठत २ ठठ स्वाहा । ॐ० अत्र मम सन्निहिता भवत २ वषट् स्वाहा । आह्वानस्थापनसन्निधीकरणं ॥ हे चतुर्णिकायामरदेवा इदमर्घ्यमित्यादि ॥ तृतीयमेखलायां चतुर्णिकायामरेंद्रार्चनं ॥

## ॥ अथ दिक्पालकपूजा ॥

कल्याणेषु जिनेश्वरस्य निचया भक्त्या च शक्राज्ञया । स्थित्वा दिक्षु निजांकवाहनवधूशस्त्र-प्रभावान्विताः ॥ ये निघ्नंति परप्रयुक्तविविधप्रत्यूहहजालं तथा । तानिंद्रादिदिशाधिपान दश-विधानंर्चामि होमोत्सवे ॥ ॐ आं क्रों ऱ्हीं प्रश० हे इंद्रादिदशलोकपाला अत्र आगच्छत २ संवौषट् स्वाहा । ॐ० अत्र तिष्ठत २ ठठ स्वाहा । ॐ० अत्र मम सन्निहिता भवत २ वषट् स्वाहा ॥ आह्वानस्थापनसन्निधीकरणं ॥ हे इंद्रादिदशलोकपाला इदमर्घ्यमित्यादि ॥ इति दिक्पालकार्चनं ॥

## ॥ अथ आज्याहुतिः ॥

स्रुवेण वाऽश्वत्थदलेन नव्यं गव्यं घृतं मंत्रसमंतमेनत । अपिच्छलं प्रज्वलिताऽग्निकुंडे जुहोमि वारं शतमष्टयुक्तं ॥ १ ॥ ( डावानें किंवा पिंपळवृक्षाच्या पानानें ताजें तूप घेऊन, पुढील मंत्रानें होमकुंडांत आहुति देणें. )

## ॥ आज्याहुतिमंत्रः ॥

ॐ ऱ्हीं अर्हत्सिद्धकेवलिभ्यः स्वाहा । ॐ ऱ्हीं पंचदशतीर्थंकरेभ्यः स्वाहा । ॐ ऱ्हीं नव-ग्रहदेवेभ्यः स्वाहा । ॐ ऱ्हीं द्वात्रिंशदिंद्रेभ्यः स्वाहा । ॐ ऱ्हीं दशलोकपालकेभ्यः स्वाहा ।

ॐ ह्रीं अग्नींद्राय स्वाहा ॥ षडेतान् मंत्रान् अष्टादशकृत्वः पुनरावर्तनेनोच्चारयन् प्रत्येकमाज्याहुतिं कुर्यात् ॥ ( आज्याहुतीचे मंत्र ६ आहेत. हे मंत्र फिरून फिरून १८ वेळा ह्मणावे व प्रत्येक मंत्राने तुपाची आहुति देणे. ) ततश्च पीठिकामंत्रैः कुसुमाक्षतचंदनैः । मिश्रांबुपूर्णपाणिभ्यां कुर्वंतु परमेष्ठिनां ॥ २ ॥ ॐ ह्रां अर्हत्परमेष्ठिनस्तर्पयामि । ॐ ह्रीं सिद्धपरमेष्ठिनस्तर्पयामि । ॐ ह्रूं आचार्यपरमेष्ठिनस्तर्पयामि । ॐ ह्रौं उपाध्यायपरमेष्ठिनस्तर्पयामि । ॐ ह्रः सर्वसाधुपरमेष्ठिनस्तर्पयामि ॥ गंधपुष्पाक्षतदर्भखंडान्वितजलेन मितपात्रस्थितेन पंचपरमेष्ठिनस्तर्पयामि ॥ ( येथे गंध पुष्प अक्षत दर्भखंड व पाणी ही द्रव्ये दोनी हातांत घेऊन वर सांगितलेल्या अर्हत्परमेष्ठी आदिकरून पंच परमेष्ठीस तर्पण करणे. ) ॐ ह्रीं अग्निं परिषिंचयामि । क्षीरेण अग्निपर्युक्षणं ॥ ( येथे यामंत्राने अग्नींत दुधाचा सिंतोडा देणे. ) ॐ ह्रीं अर्हत्सिद्धकेवलिनस्तिथिदेवता महाग्रहदेवताः सुरेंद्रादयो दिक्पाला अग्नींश्च सर्वेऽप्येते अघोरहोमैराराधिताः प्रसन्नवंतो भवंतु । तत्प्रसादादस्य यजमानस्य शांतिर्भवतु । संघस्य शांतिर्भवतु । राज्ञः शांतिर्भवतु गृहस्य शांतिर्भवतु । लोकस्य शांतिर्भवतु । जलाधारानिपातेन ॥ प्रार्थना ॥ इति आज्याहुतिः ॥ ( येथे या वरील मंत्राने जलधारापूर्वक प्रार्थना करणे. याप्रमाणे आज्याहुति करणे. )

## ॥ अथ समिधाहुतिः ॥

पलाशजाता मधुरप्रयुक्ता आहोस्विदश्वत्थतरुप्रसूताः । आर्द्राः सुवृत्ताः कथितप्रमाणाः करेण सम्यक् समिधा जुहोमि ॥ ( पळस, रुई, पिंपळ, खैर, व चंदन आदिकरून ह्या झाडांच्या ढाळीचीं लाकडें यांस समिधा ह्मणतात. ) ह्या थांड्या ओलसर, गोल व वीतीच्या प्रमाणाच्या आसाव्यात. अशा ह्या समिधा अग्नीस आहुति देणें.

## ॥ समिधाहुतिमंत्रः ॥

ॐ ह्रां ह्रीं ह्रूं ह्रौं ह्रः असिआउसा सर्वशांतिं कुरु २ स्वाहा ॥ अनेन मंत्रेण समिद्भिराहुतयः । करण होतव्याः ॥ इति समिधा होमः ।. ( या मंत्रानें समिधाहुति होतानें १०८ वार करणें. ततः पूर्ववत् पदव्याहृतिः पंचतर्पणकपर्युक्षणानि ॥ ( समिधाहुति केल्यानंतर पूर्वी सांगितल्याप्रमाणें आज्याहुति. पंचतर्पण करून अग्नीस एक वेळा दुधाचा सिंतोडा देणें. ) विश्वे देवताधिष्ठितमहायंत्र प्राणभूतस्य मूलमंत्राभिधेयरूपा अर्हत्परमेष्ठिनः सिद्धाः सूरयः पाठकेंद्राः सर्वसाधवश्चैते महानुभावाः समित्रो होमेरराधिताः प्रसन्नाश्चैते भवंतु । तत्प्रसादात् अस्य यजमानस्य शांतिर्भवतु । संघस्य शांतिर्भवतु । राज्ञः शांतिर्भवतु । गृहस्य शांतिर्भवतु । लोकस्य शांतिर्भवतु । जलधारासेचनेन प्रार्थना ॥ इति समिधाहुतिः ॥

## ॥ अथ लवंगाहुतयः ॥

लवंगगंधाक्षतशालिराजतिलाज्यसद्गुग्गुल्कुंकुमं च । कर्पूरलाजागरुशर्करं च शृंगाक्षमात्रं मिलितं जुहोमि ॥ ( लवंग, गंध, अक्षत, भात. तीळ, तूप, गुगळी, केशर, कापूर, भाताच्या लाह्या, अगर व साखर ह्या सर्व जिनसा कुटून आवळ्या एवढ्या गोळ्या १०८ बांधून आहुति देणें. )

## ॥ लवंगाहुतिमंत्रः ॥

ॐ ह्रां अर्हद्भ्यः स्वाहा । ॐ ह्रीं सिद्धेभ्यः स्वाहा । ॐ ह्रूँ सूरिभ्यः स्वाहा । ॐ ह्रौं पाठकेभ्यः स्वाहा । ॐ ह्रः सर्वसाधुभ्यः स्वाहा । ॐ ह्रीं जिनधर्मेभ्यः स्वाहा । ॐ ह्रीं जिनागमेभ्यः स्वाहा । ॐ ह्रीं जिनचैत्येभ्यः स्वाहा । ॐ ह्रीं जिनचैत्यालयेभ्यः स्वाहा । ॐ ह्रीं सम्यग्दर्शनाय स्वाहा । ॐ ह्रीं सम्यग्ज्ञानाय स्वाहा । ॐ ह्रीं सम्यक् चारित्राय स्वाहा । ॐ ह्रीं जयाद्यष्टदेवताभ्यः स्वाहा । ॐ ह्रीं रोहिण्यादिषोडशविद्यादेवताभ्यः स्वाहा । ॐ ह्रीं चतुर्विंशतियक्षेभ्यः स्वाहा । ॐ ह्रीं चतुर्विंशतियक्षीभ्यः स्वाहा । ॐ ह्रीं दशविधभवनवासिभ्यः स्वाहा । ॐ ह्रीं अष्टविधव्यंतरेभ्यः स्वाहा । ॐ ह्रीं पंचविधज्योतिरिंद्रेभ्यः स्वाहा । ॐ ह्रीं द्वादशकल्पवासिभ्यः स्वाहा । ॐ ह्रीं अष्टदिक्कन्यकाभ्यः स्वाहा । ॐ ह्रीं दशलोकपालकेभ्यः स्वाहा ।

ॐ ऱ्हीं अग्नींद्राय स्वाहा। ॐ स्वाहा। भूः स्वाहा। भुवः स्वाहा। स्वः स्वाहा॥ एतान् सप्तविंशतिमंत्रान् चतुर्वारानुच्चार्य प्रत्येकलवंगादिद्रव्यैराहुतिंकुर्यात्॥ इति लवंगादिद्रव्याहुतिः॥ ( हे २७ मंत्र ४ वेळा उच्चारून लवंगादिद्रव्याच्या गोळया १०८ प्रत्येक मंत्रानें आहुति देणें. याप्रमाणें लवंगाहुति करणें. ) ततः पूर्ववत् षडाज्याहुतिपंचतर्पणैकपर्युक्षणानि॥ ( लवंगाहुति केल्यानंतर पूर्वी सांगितल्याप्रमाणें आज्याहुति आदि सर्वविधि करणें. ) अर्हदादयो नवदेवताः सम्यग्दर्शनज्ञानचारित्राणि जयाद्यष्टदेवता रोहिण्यादयो विद्यादेव्यश्च। गोमुखादयो यक्षेंद्राश्चक्रेश्वर्यादयः शासनदेवताश्च। असुरेंद्रादयः सर्वे सुरेंद्राः श्रीप्रभृतयो दिक्कन्यका इंद्रपौरस्त्यदिक्पाला अग्नींद्रश्च। एते सर्वेऽपि देवता लवंगादिहोमै राराधिताः सुप्रसन्ना भवंतु। तत्प्रसादादस्य यजमानस्य शांतिर्भवतु। संघस्य शांतिर्भवतु। राज्ञः शांतिर्भवतु। गृहस्य शांतिर्भवतु। लोकस्य शांतिर्भवतु। जलधारानिपातेन प्रार्थना॥

## ॥ अथ अन्नाहुतयः ॥

शाल्योदनक्षीरविचित्रभक्ष्यैः पक्वान्नसर्पिःसितपायसं च। सुस्वादपक्वं कदलीफलं च शृंगाक्षमात्रं मिलितं जुहोमि॥ ( तांदळाचा भात, दूध, लाडू वगैरे भक्ष्यपदार्थ, पक्वान्न, तूप, शुभ्रखीर व स्वादयुक्त केळें हीं सर्व जिनसा एकत्र करून कालवून आवळया एवढ्या गोळया १०८ बांधून आहुति देणें. )

## ॥ अन्नाहुतिमंत्रः ॥

ॐ सत्यजाताय नमः । ॐ अर्हज्जाताय नमः । ॐ परमजाताय नमः । ॐ अनुपमजाताय नमः । ॐ स्वप्रदाय नमः । ॐ अचलाय नमः । ॐ अक्षताय नमः । ॐ अव्याबाधाय नमः । ॐ अनंतज्ञानाय नमः । ॐ अनंतदर्शनाय नमः । ॐ अनंतवीर्याय नमः । ॐ अनंतसुखाय नमः । ॐ निरजसे नमः । ॐ निर्मलाय नमः । ॐ अच्छेद्याय नमः । अभेद्याय नमः । ॐ अजराय नमः । अमराय नमः । ॐ अप्रमेयाय नमः । ॐ अगर्भवासाय नमः । ॐ अक्षोभ्याय नमः । ॐ अविलीनाय नमः । ॐ परमपुरुषाय नमः । ॐ परमकाष्ठायोगरूपाय नमः ॥ ॐ लोकाग्रनिवासिने नमः । ॐ परमसिद्धेभ्यो नमः । अर्हत्सिद्धेभ्यो नमः । ॐ केवलिसिद्धेभ्यो नमः । ॐ अंतकृत्सिद्धेभ्यो नमः । ॐ परंपरसिद्धेभ्यो नमः । ॐ अनादिपरंपरसिद्धेभ्यो नमः । ॐ अनाद्यनुपमसिद्धेभ्यो नमः । ॐ सम्यग्दृष्टे २ आसन्नभव्य २ निर्वाणपूजार्ह २ अग्नींद्राय स्वाहा । सेवाफलं षट्परमस्थानं भवतु । अपमृत्युविनाशनं भवतु । समाधिमरणं भवतु ॥ ततः पूर्वोक्तमंत्रेण षडर्घ्याहुतिपंचतर्पणकपर्युक्षणानि ॥ पीठिकामंत्रैःषट्त्रिंशद्भिरुक्तैः प्रतिमंत्रैस्त्रिवारानुच्चारितैः प्राक्संख्याय अन्नाहुतिं विदध्यात ॥ इत्यन्नाहुतयः ॥ ( या अन्नाहुतींचे मंत्र ३६ आहेत. हे मंत्र ३ वेळा उच्चारून प्रत्येक मंत्रानें अन्नाहुतीच्या गोळ्या १०८ आहुति देणें. त्यानंतर पूर्वी

शांतिलघ्याप्रमाणें आज्याहुति आदि सर्वविधि करणें. याप्रमाणें अन्नाहुति करणें. ) परमपीठिका-रूपदिव्यमंत्राभिधेयास्तेऽनादिसिद्धा जातिमंत्ररूपार्हन्मंत्रादयोऽन्नाहुतयः समाराधिताः प्रसन्नवंतो भवंतु । तत्प्रसादादस्य यजमानस्य शांतिर्भवतु । संघस्य शांतिर्भवतु । राज्ञः शांतिर्भवतु । गृहस्य शांतिर्भवतु । लोकस्य शांतिर्भवतु । जलधारानिपातेन प्रार्थना ॥ इत्यन्नाहुतयः ॥

## ॥ अथ पूर्णाहुतिः ॥

जिनेश्वराणां च तिथीश्वराणां ग्रहामराणां च दिशाधिपानां । अग्निप्रसादाहुतिदिव्यमंत्रैराज्येन पूर्णाहुतिमाननोमि ॥

## ॥ पूर्णाहुतिमंत्र ॥

ॐ ह्रीं तिथिदेवाः पंचदश प्रसीदंतु । ग्रहदेवाः प्रत्यवायं पराभवंतु । भावनादयो द्वात्रिंशदिंद्राः प्रमोदयंतु । इंद्रादयो विश्वदिक्पालाः पालयंतु । अग्नींद्रमौल्युद्भवोऽग्निदेवः प्रसन्नो भवतु । शेषाः सर्वेऽपि देवता एते राजानं विराजयंतु । दातारं तर्पयन्तु । संघं च श्लाघयंतु । वृष्टिं वर्षयंतु । ईतिं निधानयंतु । मारिं निवारयंतु ॥ ॐ नमोऽर्हते । भगवते । श्रीशांतिनाथाय । शांतिकराय । केवलदर्शनप्रज्वलनाय । पूर्णाहुतिज्वलितज्ञानाय । संपूर्णफलार्थं पूर्णाहुतिं विदध्महे ॥ पूर्णार्घ्यं ॥

इति पूर्णाहुतिः ॥ ( या मंत्रांनीं तुपाची धार एकसारखी अग्नीवर धरणें व मंत्र संपल्यानंतर अग्नीस पूर्णार्घ्य देणें याप्रमाणें पूर्णाहुति करणें. )

## ॥ अथ शांतिभक्तिः ॥

शांतिजिनं शशिनिर्मलवक्त्रं इत्यादि पठेत् ॥ इति ग्रहहोमविधानं समाप्तम् ॥

## ॥ अथ जलहोमविधानं ॥

श्रीमत्सुरेंद्रभवनेंद्रनरेंद्रवंद्यं पूज्यं जिनेंद्रमभिवंद्य मुनींद्रवंद्यं । त्रैलोक्यनाथसवनाभ्युदये विनेयशांत्यै करोमि कुसुमांजलिमंजसैव ॥ १ ॥ ॐ ह्रीं श्रीं क्षीं भूः स्वाहा प्रस्तावनाय पुष्पांजलिः ॥ श्रीमत्त्रिलोकजनशांतिकरप्रशांतिं संसारसंततिपरिभ्रमणोपशांतिं । श्रीशांतिनाथमभिवंद्य समर्च्य शांतिहोमोत्सवाय कुसुमांजलिमुत्क्षिपामि ॥ २ ॥ जलहोमप्रारंभे प्रस्तावनाय पुष्पांजलिः ॥ जलस्थलशिलावालुकापर्यंतभूमिशोधनपूर्वकं भूमिशोधनं करोमि स्वाहा । भूमिशोधनं ॥ शांतिनाथं नमस्कृत्य सर्वविघ्नोपशांतये । सर्वभव्यालिशांत्यर्थं शांतिहोमोऽयमुच्यते ॥ ३ ॥ ॐ परब्रह्मणे नमो नमः । स्वस्ति २ । जीव २ । नंद २ । वर्धस्व २ । विजयस्व २ । अनुशाधि २ । पुनीहि २ । पुण्याहं २ । मांगल्यं २ । पुष्पाक्षतं क्षिपेत ॥ श्रीमद्गीर्वाणलोकप्रवणमणिगणाश्लिष्टमौलिप्रकृष्ट— । श्रीभिःशोभाभिरालिंगितपदमहसामर्हतां सर्वदार्चा ॥ रक्षायक्षादिरामा समवसरणगां योजनद्वादशांगां । त्वंतस्थं क्षेत्रपालं विधिवदखिलदुर्विघ्ननिर्विघ्नमंते ॥ १ ॥ भेरी गंभीरनादा प्रविततकह-

लाशंखढक्कामृदंगाः । प्रध्वानध्वानघंटा झनझनरवगाढकोलाहलौघैः ॥ रंगद्रंगातरंगोद्धतमुकुलरवा-
शंकिनैः क्षुभ्यदब्धिध्वानैरनेकैः प्रगर्जद्घनरवसदृशैः श्रीजिनानि यजामः ॥ ५ ॥ ॐ ह्रीं पुष्पाक्षतं
विक्षिप्य ध्वानकेन वाद्यमुद्घोषणं ॥ क्षेत्रं सर्वं पवित्रं गृहनगरवनोद्यानधन्वादिभेदं । यो रक्षत्यक्ष-
साक्षादपि समवसृतेः क्षेत्र मेतद्विशेषात ॥ तैलैः सिंदूरचूर्णैर्गुडकुसुमलसद्गंधकौसुंभवस्त्रैः । रत्नाद्यै-
श्चापि यज्ञे प्रमुदितहृदयं तं यजे क्षेत्रपालं ॥ ६ ॥ ॐ आं क्रों ह्रीं प्रशस्तवर्ण सर्वलक्षणसं-
पूर्ण स्वायुधवाहनचिन्हसपरिवार हे क्षेत्रपाल अत्र आगच्छ २ संवौषट् । स्वाहा । ॐ० अत्र
तिष्ठ २ ठठ स्वाहा । ॐ० अत्र मम सन्निहितो भव २ वषट् स्वाहा ॥ आह्वानस्थापनसान्नि-
धीकरणं ॥ ॐ ह्रीं क्षेत्रपालाय तैलाभिषेचनं करोमि स्वाहा । ॐ ह्रीं क्षेत्रपालाय सिंदूरधूलीसे-
चनं करोमि स्वाहा । ॐ ह्रीं क्षेत्रपालाय सुगंधगंधानुलेपनं करोमि स्वाहा । ॐ ह्रीं क्षेत्रपालाय
कौसुंभवस्त्रवेष्टनं करोमि स्वाहा । ॐ ह्रीं क्षेत्रपालाय पुष्पमालावेष्टनं करोमि स्वाहा । ॐ ह्रीं
क्षेत्रपालाय गुडमोदकार्पणं करोमि स्वाहा । ॐ ह्रीं क्षेत्रपालाय सुगंधद्रव्यार्चनं करोमि स्वाहा ।
ॐ ह्रीं क्षेत्रपालाय जलं गंधं अक्षतं पुष्पं चरुं दीपं धूपं फलं अर्घ्यं शांतिधारां समर्पयामि ॥

## ॥ अथ वास्तुकुमारपूजा ॥

उत्खातपूरितशर्माकृतसंस्कृतायां । पुण्यात्मनीयभगवत्समवसंडपोर्व्यां ॥ वास्त्वर्चनादिविधिलब्धि-
सत्वादिभागं । येषां यजामि शशिभूद्दिशि वास्तुदेवं ॥ ॐ ह्रीं हे वास्तुकुमारदेव अत्र

आगच्छ २ संवौषट् स्वाहा। ॐ० अत्र तिष्ठ २ ठठ स्वाहा। ॐ० अत्र मम सन्निहितो भव २ वषट् स्वाहा। आह्वानस्थापनसन्निधीकरणं॥ ॐ ह्रीं वास्तुकुमारदेव इदमर्घ्यं पाद्यं जलं गंधं अक्षतं पुष्पं चरुं दीपं धूपं फलं बलिं स्वास्तिकं यज्ञभागं यजामहे प्रतिगृह्यतां २ स्वाहा॥ शांतिधारां॥ १॥ आयात भो वायुकुमारदेवाः प्रभोर्विहारावसरात्तसेवाः॥ यज्ञांगमुद्भेदसुगंधिशीतमृद्वायुना शोधयताध्वरोर्वीं॥ ॐ ह्रीं वायुकुमारदेव सर्वविघ्नविनाश महीं पूतां कुरु २ हुं फट् स्वाहा। षड्दर्भपूलेन भूमिं संमार्जयेत्॥ ॐ ह्रीं वायुकुमारदेव अत्र आगच्छ २ संवौषट् स्वाहा। ॐ० अत्र तिष्ठ २ ठठ स्वाहा। ॐ० अत्र मम सन्निहितो भव २ वषट् स्वाहा॥ आह्वानस्थापनसन्निधीकरणं॥ ॐ ह्रीं वायुकुमारदेव इदमर्घ्यमित्यादि॥ २॥ आयात भो मेघकुमारदेवाः प्रभोर्विहारावसरात्तसेवाः। गृण्हीत यज्ञं समुदीर्णतापा गंधोदकैः प्रोक्षत यज्ञभूमिं॥ ॐ ह्रीं मेघकुमारदेव धरां प्रक्षालय २ अंहंमंवंझंठंक्षः फट् स्वाहा। षड्दर्भपूलोपात्तजलेन भूमिं सिंचेत्॥ ॐ ह्रीं मेघकुमारदेव अत्र आगच्छ २ संवौषट् स्वाहा। ॐ० अत्र तिष्ठ २ ठठ स्वाहा। ॐ० अत्र मम सन्निहितो भव २ वषट् स्वाहा। आह्वानस्थापनसन्निधीकरणं॥ ॐ ह्रीं मेघकुमारदेव इदमर्घ्यमित्यादि॥ ३॥ आयात भो वन्हिकुमारदेवा आदानविद्यादिविधीयसेवाः। भजध्वमिज्यां

समिमां मखोर्वी ज्वालाकलापेन परं पुनीत ॥ ॐ ह्रीं वन्हिकुमारदेव ज्वल प्रज्वल अमिततेजसे स्वाहा । षड्दर्भपूलानलेन भूमिं ज्वालयेत् ॥ हे वन्हिकुमार अत्र आगच्छ २ संवौषट् स्वाहा । हे व० अत्र तिष्ठ २ ठठ स्वाहा । हे व० अत्र मम सन्निहितो भव २ वषट् स्वाहा ॥ आह्वानस्थापनसन्निधीकरणं ॥ ॐ ह्रीं वन्हिकुमारदेव इदमर्घ्यमित्यादि ॥ ४ ॥ नागाः समुत्थाय महीमुपेत्य संचारशीलाः सुखिनः समर्थाः । जिनाध्वरे षष्टिसहस्रसंख्याः प्रतृप्यताऽनेन सुधारसेन ॥ ॐ ह्रीं भूषष्टिसहस्रसंख्येभ्यो नागेभ्योऽमृतांजलिं प्रसिंचामि स्वाहा । ईशान्यां दिशि नागसंतर्पणं ॥ हे नागकुमारदेव अत्र आगच्छ २ संवौषट् स्वाहा । हे ना० अत्र तिष्ठ २ ठठ स्वाहा । हे ना० अत्र मम सन्निहितो भव २ वषट् स्वाहा ॥ आह्वानस्थापनसन्निधीकरणं ॥ ॐ ह्रीं नागकुमारदेव इदमर्घ्यमित्यादि ॥ ५ ॥

## ॥ अथ पुण्याहवाचनपरिधानव्यासनं ॥

श्रीनिर्जरेशाधिपचक्रपूर्व इत्यादि पुण्याहवाचनं पठेत[1] ॥ पवित्रभूमिं परितो दिशासु पूर्वादिकासु प्रथिनान् प्रशस्तान् अशेषविघ्नोपशमाय दर्भान् संस्थापयामो हरितान् क्रमेण ॥ ॐ ह्रीं दर्पमथनाय नमः स्वाहा । ब्रह्मादिदशदिक्षु दर्भाः ॥ १ ॥ गंधप्रकराभिः परितः प्रसिक्तां काश्मीरसारेण

---

१ पृष्ठ ३० पहा.

कृतानुलेपां । सुगंधिपुष्पप्रकरां धरित्रीं यज्ञाचितां संप्रति चर्चयामि ॥ ॐ ह्रीं भूः स्वाहा । भूर्भूमिदेवते इदं जलादिकमर्चनं गृहाणं २ जलैर्गंधादिमिश्र भून्यर्चनं ॥ २ ॥ दर्भ प्रस्तीर्य वस्त्रं वा वेत्रासनमथोऽपि वा । अत्रोपवेशनं कुर्वे वामे पर्य्यंकयोगतः ॥ ॐ ह्रीं अर्हं क्ष्मं ठठ मम दर्भासनं करोमि स्वाहा ॥ ३ ॥

## ॥ अथ इंद्रालंकारः ॥

मदीयपरिणामसमानविमलतमसलिलस्नानपवित्रीभूतसर्वांगयष्टिः । सर्वांगिनार्द्रहरिचंदनसौगंध्यादिग्विदिग्विवरो हंसांशुधवलदुकूलांतरीयोत्तरीयः ॥ ॐ श्वेतवर्णे सर्वोपद्रवहारिणी सर्वजनमनोरंजिनी परिधानोत्तरीयं धारिणी हं २ झं २ वं २ सं २ तं २ पं २ परिधानोत्तरीयं धारयामि स्वाहा ॥ वस्त्राभरणं ॥ ४ ॥ अतिनिर्मलमुक्ताफलललितं यज्ञोपवीतमतिपूतं । रत्नत्रयमिति मत्वा करोमि कलुषापहरणमाभरणं ॥ ॐ ह्रीं सम्यग्दर्शनज्ञानचारित्राय नमः स्वाहा । यज्ञोपवीतसंधारणं ॥ ५ ॥ धृत्वा शेखरपट्टहारपदकग्रैवेयकालंबकं । केयूरांगदमध्यबंधुरकटीसूत्रं च मुद्रान्वितं ॥ चंचत्कुंडलकर्णपूरमसलं पाणिद्वये कंकणं । मजीरं कटकं पदे जिनपतेः श्रीगंधमुद्रांकितं ॥ षोडशाभरणं ॥ अथ शुद्धयंत्रमंत्रपवित्रजलं परिषिच्य दर्भपूलेन भूमिं संमार्जयेत् ॥ ( येथें शुद्ध यंत्रमंत्रांनीं पवित्र झालेलें पुण्याहकलशाचें पाणी सिंपून दर्भानें यज्ञभूमि झाडावी. ) ॐ ह्रीं

झंवंहंपःहः अर्हं सर्वशांतिं कुरु २ स्वाहा ॥ पुष्पांजलिः ॥ देवो दैत्यः किन्नरः खेचरेंद्रो यक्षो रक्षश्चं-
द्रसूर्यादयश्च । नामं नामं यं समाराधयंति ध्यायं ध्यायं तं जिनं पूजयामः ॥ ॐ ह्रीं अर्हं नमः
परमेष्ठिने जलं निर्वपामि स्वाहा । एवं गंधाद्यष्टविधार्चनं कुर्यात् ॥ जाताः सर्वज्ञवक्त्राद् गणधर-
निकरैर्विस्तृता वीप्रबोधै । रंगोपांगादिभेदै स्तदनुमुनिजनै श्चापि दृग्भाविशेषात् ॥ श्रेयोमार्गप्रकाशे
स्फुटरुचिविलसद्दीपिका सर्वलोक—व्यापारम्य प्रमात्री त्रिभुवनमहिता शारदा पूज्यतेऽद्य ॥
ॐ ह्रीं सरस्वत्यै नमः जलं ॥ प्रतिमादक्षिणभागे वाग्देवतार्चनं ॥ सिद्धांतसौक्तिसंकीर्णश्रुतस्कं-
धवने घने । श्रुतकेवलिनः पादौ पूजयामि महामुनेः ॥ ॐ ह्रीं गणधरपरमेष्ठिने जलं ॥ प्रति-
मावामभागे गणधरार्चनं ॥ श्रीमज्जैनेंद्रमार्गे प्रमुदितहृदयः साधुलोकोपकारी । मिथ्यादृष्टिप्रयोग-
प्रकटितनिखिलोन्मार्गविध्वंसनोत्कः ॥ नानापुण्यप्रदेशप्रविहरणपटुर्विक्रियाशक्तियुक्तः । श्रीमान्
यक्षाधिराजः प्रचुरतरमहा पूज्यते पुण्ययज्ञे ॥ ॐ ह्रीं कलियुगप्रबंधदुर्मार्गविनाशनपर सन्मार्गप्र-
तिपालिन् भगवन् यक्षेश्वर जलादिकमर्चनं गृहाण २ स्वाहा ॥ यक्षार्चनं दक्षिणे ॥ लोके सत्वानु-
कंपां परपरमजिनेंद्रोक्तसद्धर्मसेवां । दक्षां न्यक्षां मुमुक्षुजनअपि परमाह्लादनादानमंतीं ॥ स्याद्वादन्या-
यखड्गक्षपितकलियुगानेकदुर्मार्गकक्ष्यां । यक्षीं यक्षामि यज्ञ त्रिजगदधिपतेः सर्वविघ्नोपशांत्यै ॥
ॐ ह्रीं कलियुगप्रबंधदुर्मार्गविनाशनपरे सन्मार्गप्रतिपालिनि भगवति यक्षिदेवि जलादिकम-
र्चनं गृहाण २ स्वाहा ॥ शासनदेवतार्चनं वामे ॥ इत्येवं होमकुंडपश्चिमभागस्थपरमतत्त्वना...-

मभिधाय । तत्कुंडमलंकृत्य । भूम्यर्चनाक्रमेणाभ्यर्च्य । पुण्याहकलशं संस्थाप्य । सर्वोपद्रव-नाशनकृज्जलयंत्रं तन्मध्ये निक्षिप्य क्रमादाराधयिष्यामः ॥ ( याप्रमाणें जलहोमकुंडाच्या पश्चिमभागीं असलेल्या श्रीजिनप्रतिमेची पूजा सांगून, त्या जलहोमकुंडास अलंकार करून, भूम्यर्चनाक्रमानें अर्चना करून, पुण्याहकलश स्थापून, त्या पुण्याहकलशांत सर्वोपद्रव नाशकरणारें जलयंत्र ठेवून, पुढें सांगितल्याप्रमाणें पूजा चालविणें. ) हस्तप्रमाणविस्तारमायामेनावगाढतः । चतुरंगुलविस्तारमेखलात्रितयान्वितं ॥ १ ॥ श्रीप्रातिहार्याष्टकवैभवेऽस्मिन् श्रीविष्णुभृत्येशफणींद्रवंद्यं । नत्वा जिनेंद्रं जलहोममेवं वक्ष्ये प्रशांत्यै विषमग्रहाणां ॥ २ ॥ यस्तद्वर्तुलकुंडलक्षणमिदं श्रीवारिहोमो जिनैः । प्रोक्तं ताम्रमृदादिवस्तुरचितं कुंडं समारोप्यते ॥ कुर्याच्छ्रीतिथिदेवता ग्रहसुरान् शेषांश्च संतर्पणं । शांत्यर्थं जलहोम मिष्टममलं दुष्टग्रहाणां बुधः ॥ ३ ॥ सत्कुर्यादग्निहोमं च जलहोमं च सद्द्विजः । प्रत्यग्न्यस्यच यो जैनो वारिशासनसंयुतः ॥ ४ ॥ श्रीखंडतंडुलस्रग्भिः संभूषितगलं वरं । शुद्धतीर्थोदकैः पूर्णं जलकुंडं महाम्यहं ॥ ५ ॥ सुधौतशोभिते व्रीहीपुंजे जिनमहामहे । संस्थाप्य पूजकाचार्यो जलहोमं समाचरेत् ॥ ६ ॥ ॐ नमोऽर्हते भगवते श्रीमते पद्ममहापद्मतिगिंच्छकेसरीमहापुंडरीकपुंडरीकगंगासिंधुरोहिद्रोहितास्याहरिद्धरिकांतासीतासीतोदानारीनरकांतासुवर्णकूलारूप्यकूलारक्तारक्तोदाद्यनेकनदीनदजलप्रवाहपरिपूर्णमधुरजलधीक्षुरससमुद्रघृतार्णवक्षीरसागरप्रभृत्यखिलतीर्थदेवतामणिमयमंगलकलशसंभृतं नव-

रत्नसुगंधचूर्णपुष्पफलकुशाद्यैश्च रचितं तीर्थोदकं पवित्रं कुरु २ झ्रौं २ वंमंहंसंतंपंझ्वींहंसः असिआउसा जलशुद्धिं कुरु २ नमः स्वाहा ॥ जलपवित्रीकरणमंत्रः ॥ ( येथें हा मंत्र ह्मणत जलहोमकुंडाच्या पश्चिमभागीं उजवीकडे मांडलेल्या कुंभावर हातानें पाणी धरणें; ह्मणजे त्या कुंभांतील पाणी पवित्र होतें. ) संपूर्णपूर्णकुंभेषु गंधचंदनचर्चितं । कुंडाय च जलं दद्यात् पश्चात् पूजां समाचरेत् ॥ ७ ॥ ( येथें मंत्रानें ज्या कुंभाचें पाणी पवित्र झालें आहे तो कुंभ त्या जलकुंडांत ओतणें. नंतर पुढील पूजा चालविणें. ) झंठं यत्र स्वरवेष्टितं विधुवृतं पंत्रं च दिक्कोणयो । रूर्ध्वाधः श्रिनपंचसप्तदलभृत् पद्मद्वयांभःपुरः ॥ बाह्ये मंत्रतले विलिख्य कुशलैस्तद्यंत्रगंधार्चितं । शुद्धयर्थं निजमूर्ध्नि मंत्रितपयः

सिंचाम्यहं पावनं ॥ यंत्रमत्र लिख्यते ॥ ८ ॥ पश्चिमाभिमुखः सूरिः पद्मासनसमन्वितः । उपविश्याब्जमादाय स्थापयेत् कुंडमध्यतः ॥ ९ ॥ पद्मासनं कुर्यात ॥ ( येथें पंडितानें पश्चिमेकडे तोंड

करून होमकुंडाच्या पूर्वेस मांडलेल्या दर्भासनावर अलकट पालकट घालून बसणें आणि एक कमल घेऊन जलहोमकुंडाच्या मध्यभागीं ठेवणें.) ततः परं शंबरनामधेयं क्षिप्त्वा च यंत्रं लसदंबुकुंडे। शीतोष्णजातज्वरविग्रहाणां नृणां प्रशांत्यै प्रयजेयमित्थं ॥ (त्यानंतर लिहून तयार केलेलें तें श्रेष्ठ जलयंत्र जलकुंडांत ठेवून, शीतज्वर व उष्णज्वर ज्यांच्या शरीरास प्राप्त झाले आहेत अशा मनुष्यांच्या शांतीकरितां पुढें सांगितल्याप्रमाणें त्या यंत्राची पूजा चालविणें.)

## ॥ अथ जलयंत्रपूजा ॥

स्वच्छांबुगंधविमलाक्षतपुष्पजातैर्नैवेद्यदीपवरधूपफलोत्कराद्यैः। शीतोष्णतप्तजनशांतिकरीं हिमांशुः श्रीवारियंत्रमनवं महयामि भक्त्या ॥ १ ॥ आगच्छ तिष्ठ तिष्ठेति सन्निधिं मे भज शंबराख्ययंत्र त्वं। आह्वानक्रियादिकयाऽऽनंदान्नौमि शांतिकृते ॥ ॐ ऱ्हीं शंबरनामधेययंत्र अत्र अवतर २ संवौषट् स्वाहा। ॐ० अत्र तिष्ठ २ ठठ स्वाहा। ॐ० अत्र मम सन्निहितं भव २ वषट् स्वाहा ॥ आह्वानस्थापनसन्निधीकरणं ॥

## ॥ अष्टकम् ॥

अंबुभिरंबुदमार्गेतटिन्युच्चुंबितशुंभदनूनसुगंधैः। शंबरशत्रुत्रिडंबसमक्षं शंबरचक्रमहं परिचाये ॥ ॐ ऱ्हीं शंबरनामधेयाय ॥ जलं ॥ १ ॥ गंधगजेंद्रकपोलमिलिंपाऽनंतकरींदुकरंबपटीरैः।

शंबर० ॥ ॐ ऱ्हीं शं० ॥ गंधं ॥ २ ॥ अक्षयमोक्षबलाक्षसमक्षैरक्षतमूर्तिभिरक्षतपुंजैः । शंबर० ॥ ॐ ऱ्हीं शं० ॥ अक्षतं ॥ ३ ॥ जातिजपांबुजमल्लिमुमल्लीकेतकिकैरवजातलतांतैः । शंबर० ॥ ॐ ऱ्हीं शं० ॥ पुष्पं ॥ ४ ॥ इक्षुगुडाज्यपयःपरिपाकैरक्षहरैर्वरभक्ष्यसमूहैः । शं० ॥ ॐ ऱ्हीं शं ॥ चरुं ॥ ५ ॥ शोणमहामाणिनिर्मितदीपैः प्राणिमनस्तिमिराहतदक्षैः । शं० ॥ ॐ ऱ्हीं शं० ॥ दीपं ॥ ६ ॥ कुंकुमकृष्णागरुभरजातैः प्रेंखखदिरतरुधूपसमूहैः । शंबर० ॥ ॐ ऱ्हीं शं० ॥ धूपं ॥ ७ ॥ भव्यभवज्वरनाशनहेतुदिव्यफलैः सकलामयभेदैः । शंबर० ॥ ॐ ऱ्हीं शं० ॥ फलं ॥ सलिलसदकगंधोत्फुल्लदीपप्रधूपैः प्रवरचरुफलादिद्रव्यसंदर्भगर्भैः । कनकमयसुपात्रेऽर्घ्यं मुद्धारयामो जिनवरपदमूले शंबरस्योद्धरामि ॥ अर्घ्यं ॥ शांतिधारां ॥ तिथिग्रहखुरैर्लोकपालैरप्य-भिवेष्टितं । होमकुंडं शुभं प्राहुः सर्वशांतिकियास्वपि ॥ १ ॥

## ॥ अथ प्रथममेखलाभ्यंतरे तिथिदेवतार्चनं ॥

जैनेंद्रशासनरतास्तिथिदेवतास्ता यक्षादयो जिनमुखाश्रितयज्ञभागाः । वस्त्रायुधाभरणलक्षणवा-हनांका निघ्नंतु विघ्ननिचयं हवनोत्सवेऽस्मिन् ॥ १ ॥ ॐ ऱ्हीं क्रों पंचदशतिथिदेवता अत्र आगच्छत २ संवौषट् स्वाहा । ॐ० अत्र तिष्ठत २ ठठ स्वाहा । ॐ० अत्र मम सन्निहिता भवत २ वषट् स्वाहा ॥ आह्वानस्थापनसन्निधीकरणं ॥ यक्षादिकान् जैनमहामहेऽस्मिन् पंचा-दशाऽहं तिथिनिर्जगंरतान् । हुत्वा च संस्थाप्य विधिक्रमेण प्रीत्या मुखांस्तैः? परितर्पयामि ॥ २ ॥

यक्षो वैश्वानरराक्षः प्रबल,तरमहा,मोहरक्षः सुदेवौ । नैऋत्याक्षिः समन्तादसुरगृहशिशुः पन्नगो विश्वमाली ॥ आगत्य स्वायुधाद्यैरिह तु चमरवैरोचनौ विघ्नमारौ । विश्वस्पिंडाशनौ ये जिनमहसमये तान्यजे सुश्रियै ते ॥ ॐ ह्रीं क्रों यक्षादिपंचदशतिथिदेवा इदमर्घ्यं पाद्यं जलं गंधं अक्षतं पुष्पं चरुं दीपं धूपं फलं बलिं स्वस्तिकं यज्ञभागं यजामहे प्रतिगृह्यतां २ स्वाहा ॥ शांतिधारां ॥ इति तिथिदेवतार्चनं ॥

## ॥ अथ द्वितीयमेखलायां नवग्रहार्चनं ॥

निर्माय नित्यं क्षणिकादिकानां प्रदक्षिणीकृत्य च मंदराद्रिं । स्फुरंति कांत्या गगनांगणे ते सर्वे ग्रहा होममहे भवंतु ॥ ॐ आँ क्रों ह्रीं प्रशस्तवर्णाः सर्वलक्षणसंपूर्णाः स्वायुधवाहनवधूचिन्हसपरिवारा हे नवग्रहदेवा अत्र आगच्छत २ संवौषट् स्वाहा । ॐ० अत्र तिष्ठत २ ठठ स्वाहा । ॐ० अत्र मम सन्निहिता भवत २ वषट् स्वाहा ॥ आह्वानस्थापनसन्निधीकरणं ॥ आदित्यादिमहाग्रहा नवविधाः सर्वे जिनेंद्रोत्सवे । कल्याणाभिरताः प्रसन्नवदना विघ्नौघविध्वंसकाः ॥ नानावर्णतनुप्रपूरितग्रहा ज्योतिःप्रभावात्मकाः । शुद्धा यज्ञमहा भवंतु सहिता वध्वायुधांकादिभिः ॥ २ ॥ आदित्यसोमधरणीसुतसोमसूनुजीवाऽसुरार्चितशनैश्चरराहुकेतून् । सर्वान् ग्रहान् सपरिवारवधूसमेतान् भर्तुर्महोत्सवविधावहमाह्वयामि ॥ ॐ आँ क्रों ह्रीं आदित्यादिनवग्रहदेवा इदमर्घ्यमित्यादि ॥ इति नवग्रहार्चनं ॥

## ॥ अथ तृतीयमेखलायां द्वात्रिंशदिंद्रार्चनं ॥

भवनव्यंतरज्योतिष्कद्वादशाद्यनिवासिनः । द्वात्रिंशतःसुरानर्घ्यैरंचेऽहं हवनोत्सवे ॥ ॐ आँ क्रों ऱ्हीं प्रशस्त० हे द्वात्रिंशदिंद्रा अत्र आगच्छत २ संवौषट् स्वाहा । ॐ० अत्र तिष्ठत २ ठठ स्वाहा । ॐ० अत्र मम सन्निहिता भवत २ वषट् स्वाहा ॥ आह्वानस्थापनसन्निधीकरणं ॥ ज्योतिष्का भवनामरास्तदनु वा सुव्यंतराः स्वर्गिणो। ये ये स्वायुधवाहनादिविभवा द्वात्रिंशदिंद्रादयः ॥ तांस्तांश्चारुचतुर्विधान् प्रियतयाऽत्राऽऽहूय भक्त्या पुनः । कुर्वेऽहं विधिवत् सुवस्तुभिः सुसिद्धाष्टाभिरिष्टिं भुवि ॥ २ ॥ असुरभुजगाविद्युत्सत्सुपर्णाग्निवातस्तनितजलधिनाथद्वीपकाष्ठाकुमारान् । दशभवननिवासान् स्वायुधस्त्रीसमेतान् जिनपतिसवनार्थं प्रार्थयाम्यागमार्थं ॥ ॐ आँ क्रों ऱ्हीं असुरकुमारादिभवनेंद्रा इदमर्घ्यमित्यादि ॥ ३ ॥ किन्नरकिंपुरुषगरुडगंधर्वाधीशयक्षराजेंद्रान् । राक्षसभूतपिशाचान् जिनशासनव्यंतरानष्टौ ॥ ॐ आँ क्रों ऱ्हीं किन्नराद्यष्टविधव्यंतरेंद्रा इदमर्घ्यमित्यादि ॥ सन्मार्गवर्तनप्रकाशकलौ सुवृत्तलोकोपकारिकिरणैष्टवनौ हमिंद्रौ । ध्वस्ताऽखिलांधतमसौ सवने जिनस्य तीव्रांशुशीतकिरणावहमाह्वयामि ॥ ॐ आँ क्रों ऱ्हीं सोमेंद्रादिपंचविधज्योतिरिंद्रा इदमर्घ्यमित्यादि ॥ ४ ॥ सौधर्मकल्पपतिमीशसनत्कुमारमाहेंद्रपद्मभवलांतवशुक्रकल्पान् । देवं सतारसहितानत माह्वयामि सप्राणतारणसुरेंद्रमदच्युतेंद्रं ॥ ॐ आँ क्रों ऱ्हीं द्वात्रिंशदिंद्रा इदमर्घ्यमित्यादि ॥४॥

## ॥ अथ दिक्पालकपूजा ॥

पूर्वादिकाष्ठः शुचिलोकपाला होमोत्सवं वा परिपालयध्वं । गृण्हंतु पूर्णाहुतिमादरेण त्वदीयनामार्जितहोमशांत्यै ॥ १ ॥ सुरयमवरुणनिधीशान् हुतवहराक्षससमीरगौरीशान् । यज्ञेऽर्हतामिहेंदुं पानालेश माह्वये भक्त्या ॥ २ ॥ पूर्वाशाधीशहव्याशनमहिषगता नैर्ऋते पाशपाणे । वायोयक्षेद्र चंद्राभरण फणिपते रोहिणीजीवितेश ॥ सर्वेप्यायात वाहायुधयुवतिजनैः सार्धं मों भूर्भुवः स्वः । स्वधा स्वाहा गृण्हीध्वं चरुममृतमिदं स्वस्तिकं यज्ञभागं ॥ ॐ आँ क्रों ऱ्हीं इंद्रादिदशदिक्पाला इदमर्घ्यमित्यादि ॥ यस्यार्थं० ॥ शांतिधारां ॥

## ॥ अथ सप्तधान्याहुतिः ॥

प्रस्थप्रमाणचणकाढकमाषमुद्गगोधूमशालियवमिश्रितसप्तधान्यैः। होमः पृथग्विधृतमुष्टिभिरंबुकुंडे वाराश्च सप्त विषमग्रहदोषशांत्यैः ॥ १ ॥ ( हरभरे, तुरी, उडीद, मूग, गहू, साळी व भात हीं ७ धान्यें होत. ह्यांतील प्रत्येक धान्य शेरभर शेरभर मोजून घेऊन एकंदर मिश्र करणें याला सप्तधान्य ह्मणतात. पुढें सांगितलेल्या प्रत्येक मंत्रानें हें मूठभर मूठभर घेऊन जलहोमकुंडांत विषमग्रहदोषाच्या शांतिकारितां ७ वार आहुति देणें. )

## ॥ मंत्रः ॥

ॐ ऱ्हीं इंद्र दातुरस्य सर्वशांतिं कुरु २ स्वाहा । ॐ ऱ्हीं अग्ने दातुरस्य सर्वशांतिं कुरु २ स्वाहा । ॐ ऱ्हीं यम दातुरस्य सर्वशांतिं कुरु २ स्वाहा । ॐ ऱ्हीं नैर्ऋत्य दातुरस्य सर्वशांतिं कुरु २ स्वाहा । ॐ ऱ्हीं वरुण दातुरस्य सर्वशांतिं कुरु २ स्वाहा । ॐ ऱ्हीं पवन दातुरस्य सर्वशांतिं कुरु २ स्वाहा । ॐ ऱ्हीं धनद दातुरस्य सर्वशांतिं कुरु २ स्वाहा । ॐ ऱ्हीं ईशान दातुरस्य सर्वशांतिं कुरु २ स्वाहा । ॐ ऱ्हीं धरणींद्र दातुरस्य सर्वशांतिं कुरु २ स्वाहा । ॐ ऱ्हीं सोम दातुरस्य सर्वशांतिं कुरु २ स्वाहा । ॐ ऱ्हीं शंबरनामधेयाय स्वाहा ॥ ( या मंत्रानें सप्तधान्याहुति देणें. ) तर्पणं पीठिकामंत्रैः कुसुमाक्षतचंदनैः । मिश्रांबुपूर्णपाणिभ्यां कुर्वंतु परमेष्ठिनां ॥ १ ॥ ॐ ऱ्हीं अर्हत्परमेष्ठिनस्तर्पयामि । ॐ ऱ्हीं सिद्धपरमेष्ठिनस्तर्पयामि । ॐ ऱ्हूं आचार्यपरमेष्ठिनस्तर्पयामि । ॐ ऱ्हौं उपाध्यायपरमेष्ठिनस्तर्पयामि । ॐ ऱ्हः सर्वसाधुपरमेष्ठिनस्तर्पयामि ॥ गंधपुष्पाक्षतदर्भखंडान्वितजलेन मित्रपात्रस्थितेन पंचपरमेष्ठिनां तर्पयामि ॥ ॐ ऱ्हीं सुरेंद्रादयो दिक्पालाः शंबरनामधेयाश्च सर्वेऽप्येते चणकादिसप्तधान्यहोमैराराधिताः प्रसन्नवंतो भवंतु । तत्प्रसादादस्य यजमानस्य शांतिर्भवतु संघस्य शांतिर्भवतु । राज्ञः शांतिर्भवतु । गृहस्य शांतिर्भवतु । लोकस्य शांतिर्भवतु ॥ जलधारानिपातेन प्रार्थना ॥ इति सप्तधान्याहुतिः ॥

## ॥ अथ त्रिधान्याहुतिः ॥

हुत्वा स्वमंत्रचितमंबुनि सप्त सप्त मुष्टिगृहीततिलशालियवं च प्रस्थं । नित्याहृतहुतसमञ्चिरथांबुकुंडे एकस्थदर्शि वरदंतु सदा ग्रहा वः ॥ १ ॥ ( तीळ, साळी व भात हीं ३ धान्यें होत. ह्यांतीलही प्रत्येक धान्य शेरभर शेरभर मोजून घेऊन एकंदर मिश्र करणें याला त्रिधान्य ह्मणतात. पुढील प्रत्येक मंत्रानें हें मूठभर मूठभर घेऊन त्याच जलहोमकुंडांत ७ वार आहुति देणें. येणेंकरून सर्व ग्रह सदोदीत प्रसन्न होतात. )

### ॥ मंत्रः ॥

ॐ आँ क्रौं ऱ्हीं हूं फट् आदित्यमहाग्रह दातुरस्य सर्वशांतिं कुरु २ स्वाहा । ॐ० सोममहाग्रह दातुरस्य सर्वशांतिं कुरु २ स्वाहा । ॐ० कुजमहाग्रह दातुरस्य सर्वशांतिं कुरु २ स्वाहा । ॐ० बुधमहाग्रह दातुरस्य सर्वशांतिं कुरु २ स्वाहा । ॐ० बृहस्पतिमहाग्रह दातुरस्य सर्वशांतिं कुरु २ स्वाहा । ॐ० शुक्रमहाग्रह दातुरस्य सर्वशांतिं कुरु २ स्वाहा । ॐ० शनिमहाग्रह दातुरस्य सर्वशांतिं कुरु २ स्वाहा । ॐ० राहुमहाग्रह दातुरस्य सर्वशांतिं कुरु २ स्वाहा । ॐ० केतुमहाग्रह दातुरस्य सर्वशांतिं कुरु २ स्वाहा ॥ (या मंत्रानें त्रिधान्याहुति देणें.) तर्पणं पीठिकामंत्रैः ॥ इत्यादिपंचपरमेष्ठिनां तर्पयामि ॥ ॐ ऱ्हीं आदित्यादयो नवग्रहाः । सर्वेऽप्येते तिलादित्रिधान्यहोमैराराधिताः प्रसन्नवंतो भवंतु । तत्प्रसादादस्य यजमानस्य शांति-

र्भवतु । संघस्य शांतिर्भवतु । राज्ञः शांतिर्भवतु । गृहस्य शांतिर्भवतु । लोकस्य शांतिर्भवतु । जलधारानिपातेन प्रार्थना ॥ इति त्रिधान्नाहुतिः ॥

## ॥ अथ जलतर्पणानि ॥

ॐ ह्रीं अर्हं सत्यजाताय नमः । ॐ ह्रीं अर्हज्जाताय नमः । ॐ ह्रीं परमजाताय नमः । ॐ ह्रीं अनुपमजाताय नमः । ॐ ह्रीं स्वप्रदाय नमः । ॐ ह्रीं अचलाय नमः । ॐ ह्रीं अक्षताय नमः । ॐ ह्रीं अव्याबाधाय नमः । ॐ ह्रीं अनंतज्ञानायः नमः । ॐ ह्रीं अनंतदर्शनाय नमः । ॐ ह्रीं अनंतवीर्याय नमः । ॐ ह्रीं अनंतसुखाय नमः । ॐ ह्रीं निरजसे नमः । ॐ ह्रीं निर्मलाय नमः । ॐ ह्रीं अछेद्याय नमः । ॐ ह्रीं अभेद्याय नमः । ॐ ह्रीं अजराय नमः । ॐ ह्रीं अमराय नमः । ॐ ह्रीं अप्रमेयाय नमः । ॐ ह्रीं अगर्भवासाय नमः । ॐ ह्रीं अक्षोभ्याय नमः । ॐ ह्रीं अविलीनाय नमः । ॐ ह्रीं परमपुरुषाय नमः । ॐ ह्रीं परमकाष्ठयोगरूपाय नमः । ॐ ह्रीं लोकाग्रनिवासिने नमः । ॐ ह्रीं परमसिद्धेभ्यो नमः । ॐ ह्रीं अर्हत्सिद्धेभ्यो नमः । ॐ ह्रीं केवलिसिद्धेभ्यो नमः । ॐ ह्रीं अंतकृत्सिद्धेभ्यो नमः । ॐ ह्रीं परंपरसिद्धेभ्यो नमः । ॐ ह्रीं अनादिपरंपरसिद्धेभ्यो नमः । ॐ ह्रीं अनाद्यनुपमसिद्धेभ्यो नमः । ॐ ह्रीं सम्यग्दृष्टिभ्यो नमः । ॐ ह्रीं आसन्नभव्येभ्यो नमः । ॐ ह्रीं निर्वाणपूजार्हेभ्यो नमः । ॐ ह्रीं शंब-

रनामधेयाय नमः । सेवाफलं षट्परमस्थानं भवतु । अपमृत्युविनाशनं भवतु । समाधि-मरणं भवतु । तर्पणं पीठिकामंत्रैः इत्यादिपंचपरमेष्ठिनां तर्पयामि ॥ परमपीठिकारूपदिव्यमंत्रा-भिधेयास्तेऽनादिसिद्धा जातिमंत्ररूपार्हन्मंत्रादयो जलाहुतयः समाराधिताः प्रसन्नवंतो भवंतु । तत्प्रसादादस्य यजमानस्य शांतिर्भवतु । संघस्य शांतिर्भवतु राज्ञः शांतिर्भवतु । गृहस्य शांति-र्भवतु । लोकस्य शांतिर्भवतु । जलधारानिपातेन प्रार्थना ॥ इति जलतर्पणानि ॥

## ॥ अथ पुनर्जलतर्पणानि ॥

ॐ ह्रां अर्हद्भ्यो नमः स्वाहा । ॐ ह्रीं सिद्धेभ्यो नमः स्वाहा । ॐ ह्रूं सूरिभ्यो नमः स्वाहा । ॐ ह्रौं पाठकेभ्यो नमः स्वाहा । ॐ ह्रः सर्वसाधुभ्यो नमः स्वाहा । ॐ ह्रीं जिन-धर्मेभ्यो नमः स्वाहा । ॐ ह्रीं जिनागमेभ्यो नमः स्वाहा । ॐ ह्रीं जिनचैत्येभ्यो नमः स्वाहा । ॐ ह्रीं जिनचैत्यालयेभ्यो नमः स्वाहा । ॐ ह्रीं सम्यग्दर्शनाय नमः स्वाहा । ॐ ह्रीं सम्यग्ज्ञानाय नमः स्वाहा । ॐ ह्रीं सम्यक्चारित्राय नमः स्वाहा । ॐ ह्रीं जया-द्यष्टदेवताभ्यो नमः स्वाहा । ॐ ह्रीं रोहिण्यादिषोडशविद्यादेवताभ्यो नमः स्वाहा । ॐ ह्रीं चतुर्विंशतियक्षेभ्यो नमः स्वाहा । ॐ ह्रीं चतुर्विंशतियक्षीभ्यो नमः स्वाहा । ॐ ह्रीं दश-विधभवनवासिभ्यो नमः स्वाहा । ॐ ह्रीं अष्टविधव्यंतरेभ्यो नमः स्वाहा । ॐ ह्रीं पंच-विधज्योतिरिंद्रेभ्यो नमः स्वाहा । ॐ ह्रीं द्वादशकल्पवासिभ्यो नमः स्वाहा । ॐ ह्रीं अष्ट-

दिक्कन्यकाभ्यो नमः स्वाहा । ॐ ह्रीं दशलोकपालकेभ्यो नमः स्वाहा । ॐ ह्रीं शंबर-नामधेयाय नमः स्वाहा । ॐ स्वाहा । भूः स्वाहा । भुवः स्वाहा । स्वः स्वाहा । तर्पणं पीठिकामंत्रैः इत्यादि पंचपरमेष्ठिनां तर्पयामि ॥ अर्हदादयो नवदेवताः । सम्यग्दर्शनज्ञानचारित्राणि । जयाद्यष्टदेवताः । रोहिण्यादयो विद्यादेवताश्च । गोमुखादयो यक्षेंद्राः चक्रेश्वर्यादयः शासनदेवताश्च । असुरेंद्रादयः सर्वे सुरेंद्राः । श्रीप्रभृतयो दिक्कन्यकाः । इंद्रपौरस्त्यदिक्पालाः । शंबर-नामधेयश्च । एते सर्वेऽपि देवता जलहोमैः समाराधिताः सुप्रसन्ना भवंतु । तत्प्रसादादस्य यजमानस्य शांतिर्भवतु । संघस्य शांतिर्भवतु । राज्ञः शांतिर्भवतु । गृहस्य शांतिर्भवतु । लोकस्य शांतिर्भवतु । जलधारानिपातेन प्रार्थना ॥ इति पुनर्जलतर्पणानि ॥ ॐ ह्रीं सम्यग्दर्शनाय नमः स्वाहा । ॐ ह्रीं सम्यज्ज्ञानाय नमः स्वाहा । ॐ ह्रीं सम्यक्चारित्राय नमः स्वाहा । इमान्मंत्रान् त्रिरुच्चार्य जलं सिंचेत[1] ॥

## ॥ अथ आचमनम् ॥

ॐ २ ह्रीं २ क्ष्वीं २ क्ष्वीं वं मं हं सं तं पं द्रां द्रीं हं सः स्वाहा । द्वादशांगस्पर्शन् ॥ ॐ भूर्भुवःस्वः असिआउसा अर्हं प्राणायामं करोमि स्वाहा ॥ इमं मंत्रं नासिकामंगुष्ठानामिका-

---

१ एका प्रथात सिंचेत् असा पाठ आहे. आणि एका प्रथांत क्षिपेत् असा पाठ आहे. आणखी एका ग्रंथात पिबेत् असा पाठ आहे. यांत सिंचेत्—सेचन करणें, क्षिपेत्—टाकणें. आणि पिबेत्—पिणें, याप्रमाणें अर्थ होतात. हे सर्व अर्थ बरोबर आहेत.

ग्रेण धृत्वा त्रिवागन् जपेत् ॥ (हा मंत्र, अंगुष्ठ व अनामिक या दोनी बोटांच्या शेवटानें नाक धरून तीन वेळा म्हणून जप करणें.) दिक्पालाः प्रतिसेवनाकुलजगद्दोषार्हदंडोद्भटाः । सौधर्मः प्रणयेन बद्धभगवत्सेवानियोगेन वा ॥ पूजापात्रकराग्रतः सदमुपेत्योपात्य चालार्चनं । प्रत्यूहान् निखिलान् निरस्यतु जिनस्नानोत्सवोत्साहिनां ॥ आदेषणार्घ्यः ॥ ॐ आँ क्रों ऱ्हीं प्रशस्तवर्ण सर्वलक्षणसंपूर्णस्वायुधवाहनवधूचिन्हसपरिवाराः । हे पंचदशतिथिदेवा नवग्रहदेवता द्वात्रिंशादिंद्रा दशलोकपालाः शंबरनामधेयदेवता सर्वे देवता इदं जलादिकमर्चनं यूयमत्र गृण्हिध्वं २ ॐ भूर्भुवः स्वाहा ॥ पूर्णाहुतिः ॥ ( येथें पूर्णार्घ्य करणें. ) अतःपरं पुण्याहमंत्रेण सिंचेत् । शांत्यष्टकं पठेत् ॥

## ॥ अथ पुण्याहमंत्रम् ॥

कर्मारातिचतुष्टयीक्षयमगात् संजातवान् बोधवान् । वाणी विश्वहितंकरा समभवद्विश्वार्थसंदर्शिनी ॥ येषां देवमहेशितं श्रुतपदं भव्याब्जपूष्णा सताम् । लक्ष्मीः शांतिमनारतं जिनवरान् सेवंतु ते भाविकाः ॥ १ ॥ अनेन यंत्राग्रे शांतिधारां प्रकल्प्येत्थं बलिं दद्यात् ॥ ॐ अर्हद्भ्यो नमः । सिद्धेभ्यो नमः । सूरिभ्यो नमः । पाठकेभ्यो नमः । सर्वसाधुभ्यो नमः । अतीतानागतवर्तमानत्रिकालगोचरानंतगुणपर्यायात्मकवस्तुपरिच्छेदकसम्यग्दर्शनज्ञानचारित्राद्यनेकगुणगणाधारपंचपरमेष्ठिभ्यो नमो नमः ॥ ॐ पुण्याहं २ प्रियंतां २ वृषभादिमहतिमहावीरवर्धमानपर्यंतपरमतीर्थंकरपर-

मत्तीर्थंकरपरमदेवाः । तत्समयपालिनोऽप्रतिहतचक्रचक्रेश्वरीप्रभृतिचतुर्विंशतिशासनदेवताः । गोमुखयक्षप्रभृतिचतुर्विंशतियक्षाः । आदित्यचंद्रमंगलबुधबृहस्पतिशुक्रशनिराहुकेतुप्रभृत्यष्टाशीतिग्रहाः । वासुकीशंखपालककर्कोटककुलिशानंतनक्षकमलमहापद्मजयविजयनागाः । देवनागयक्षगंधर्वब्रह्मराक्षसभूतव्यंतरप्रभृतिभूताः । सर्वेऽप्येते जिनशासनवत्सलाः । ऋष्यर्जिकाश्रावकश्रावकीयष्टृयाजकराजमंत्रिपुरोहितसामंतरक्षप्रभृतिगमस्तलोकसमूहाः शांतिवृद्धितुष्टिपुष्टिक्षेमकल्याणस्वायुरारोग्यप्रदा भवंतु । सर्वसौख्यप्रदाश्च संतु । देशराष्ट्रपुरेषु च सर्वे अनिष्टाः चोरारिमारीदुर्भिक्षाबग्रहविघ्नौघदुष्टग्रहभूतपिशाचशाकिनीप्रभृतयो देवाः प्रलयं यांतु । राजा विजयी भवतु । प्रजा सौख्यं यांतु । राजप्रभृतिसमस्तलोकाः सततं जिनधर्मवत्सलाः पूजादानव्रतशीलमहामहोत्सवप्रभृतिसंपादिता भवंतु । चिरकालं नंदयंतु । अत्रस्थभव्यप्राणिनः संसारसागरं लीलयोत्तीर्य अनुपमसिद्धिसौख्यमनंतकालमनुभवंतु । इतश्चाशेषप्राणिगणतरणभूतं जिनशासनं नंदत्विति स्वाहा ॥ इति पठित्वा सर्वतः पुष्पाक्षतादिभिर्बलिं दद्यात् । इति पुण्याहमंत्रम् ॥

## ॥ अथ शांत्यष्टकम् ॥

न स्नेहाच्छरणं प्रयांति भगवन् पादद्वयं ते प्रजा । हेतुस्तत्र विचित्रदुःखनिचयः संसारघोरार्णवः ॥
अत्यंतस्फुरदुग्ररश्मिनिकरव्याकीर्णभूमंडलो । ग्रैष्मःकारयतींदुपादसलिलच्छायानुरागं रविः ॥ १ ॥
क्रुद्धाशीविषदष्टदुर्जयविषज्वालावलीविक्रमो । विद्याभेषजमंत्रतोयहवनैर्याति प्रशांतिं यथा ॥ तद्वत्ते
चरणारुणांबुजयुगस्तोत्रोन्मुखानां नृणां । विघ्नाः कायविनाशकाश्च सहसा शाम्यंत्यहो विस्मयाः ॥२॥

संतमोत्तमकांचनक्षितिधरश्रीस्पर्धिगौरद्युते । हंस त्वच्चरणप्रणामकरणात् पीडाः प्रयांति क्षयं ॥ उद्यद्भास्करविस्फुरत्करशतव्याघातनिष्कासिता । नानादेहिविलोचनद्युतिहरा शीघ्रं यथा शार्वरी ॥३॥ त्रैलोकेश्वर भंगलब्धविजयादत्यंतरौद्रात्मक-नानाजन्मशतांतरेषु पुरतो जीवस्य संसारिणः ॥ को वा प्रस्खलतीह केन विधिना लोकाग्रदावानलान्न स्याच्चेत्तव पादपद्मयुगलस्तुत्याऽपगावारिणा ॥ ४ ॥ लोकालोकनिरंतरप्रविततज्ञानैकमूर्ते विभो । नानारत्नपिनद्धदंडरुचिरश्वेतातपत्रत्रय ॥ त्वत्पादद्वय-पूतगीतरवतः शीघ्रं द्रवंत्यामया । दर्पध्मानमृगेंद्रभीमनिनदध्वन्या यथा कुंजराः ॥ ५ ॥ दिव्यस्त्री-नयनाभिरामविपुलश्रीमेरुचूडामणि । भास्वद्बालदिवाकरद्युतिहरप्राणीष्टभामंडलं ॥ अव्याबाधमचिं-त्यसारमतुलं त्यक्तोपमं शाश्वतं । सौख्यं त्वच्चरणारविंदयुगलस्तुत्यैव संप्राप्यते ॥ ६ ॥ यावन्नोदयते प्रभापरिकरः श्रीभास्करो भासयन् । तावद्धारयतीह पंकजवनं निद्रातिभारश्रमं । यावत् त्वच्चर-णद्वयस्य भगवन् न स्यात् प्रसादोदय । स्तावज्जीवनिकाय एष वहति प्रायेण पापं महत् ॥ ७ ॥ शांतिं शांतिजिनेंद्र शांतमनसस्त्वत्पादपद्माश्रयात् । संप्राप्ताः पृथवीतलेऽपि बहवः शांत्यर्थिनः प्राणिनः ॥ कारुण्यान्मम भाक्तिकस्य च विभो दृष्टिं प्रसन्नां कुरु । त्वत्पादद्वयदैवतस्य गदतः शांत्यष्टकं भक्तितः ॥ ८ ॥ अणुव्रतानि पंचैव त्रिप्रकारं गुणव्रतं । शिक्षाव्रतानि चत्वारि इत्येतद् द्वादशात्मकं ॥ ९ ॥ अर्हत्सिद्धाचार्योपाध्यायसर्वसाधून् साक्षीकृत्य । सम्यक्त्वपूर्वकं सुव्रतं दृढव्रतं समारूढं मे भवतु मे भवतु ॥ इति शांत्यष्टकं समाप्तम् ॥

## ॥ दशलाक्षणिकयंत्रम् ॥

हें यंत्र अनंतत्रयोदशीच्या दिवशीं मंडपांत असलेल्या वेदीवर पंचवर्णांनें काढणें. या यंत्राच्या कर्णिकेमध्यें धान्य घालणें. एक नवा

## ॥ हें नवदेवतायंत्र ॥

कुंभ घेऊन त्यास बाहेरल्या बाजूस गंधाचा लेप देणें. पांढरें सूत गुंडाळणें व नव्या वस्त्रानें अलंकार करून कमलकर्णिकेमध्यें घातलेल्या धान्यावर ठेवणें.

हे यंत्र एका सुवर्णताटात अष्टगंध पसरून वाळवून त्याजवर सुवर्ण-

## ॥ हे अनंतनाथाचें यंत्र ॥

शलाकानें ह्मणजे सोन्याच्या मोळ्यानें लिहिणें. आणि तें ताट नवदेवता यंत्रावर स्थापन केलेल्या कुंभावर ठेवणें.

अयं पूजापाठः
उदगांव नामक ग्रामनिवासिना आदाप्पा उपाध्यायसूनुना नेमीशा उपाध्यायेन संशोध्य
कोल्हापूर श्रीव्यंकटेश्वर मुद्रणालये मुद्रितः

श्रीशालिवाहन शकाब्दः १८४२

**प्रथमावृत्तिः— प्रतयः १०००.**

हा ग्रंथ मिळणेचा पत्ता— नेमीशा आदाप्पा उपाध्ये
गा० उदगांव पोष्ट शिरोळगेड जि० कोल्हापूर.

व्ही. पी. नें हा ग्रंथ मागविल्यास पाठविना येईल. ग्राहकांनीं आपलें नांव, गांव व पोष्ट याप्रमाणें पूर्ण पत्ता लिहावा.

